KÂVYAMÂLÂ. 8.



# THE DHARMAS'ARMÂBHYUDAYA

OF

# HARICHANDRA.



EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1888.

*Price 1 Rupee.*

KÂVYAMÂLÂ. 8.



# THE DHARMAS'ARMÂBHYUDAYA

OF

# HARICHANDRA.



EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1888.

*Price 1 Rupee.*

काव्यमाला. ८.

महाकविश्रीहरिचन्द्रविरचितं

# धर्मशर्माभ्युदयम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८८८



मूल्यमेको रूप्यकः ।

# धर्मशर्माभ्युदयस्य विषयानुक्रमः ।



नृपतेः प्रश्नः। "महासेननृपतिमहिष्यां धर्मनाथोऽवतरिष्यति, तत्सेवार्थं यूयं यात' इति महेन्द्रेणादिष्टा वयमागताः, स्वयं महेन्द्रोऽपि समागमिष्यति" इत्यादि तद्वाक्यवर्णनम्। तासां नृपमहिषीसमीपे गमनवर्णनम्। तत्कृतं नृपमहिष्याः सेवनवर्णनम्। नृपमहिष्याः स्वप्नविलोकनवर्णनम्। प्रातरुत्थाय महिष्या नृपसमीपे स्वप्ने विलोकितं सर्वं कथितम्, नृपेणाप्यतिसंतुष्टेन 'तीर्थकरस्तव पुत्रतामेष्यति' इति तत्फलं कथितमित्यादिवर्णनम्। महिषीगर्भे धर्मनाथोऽवतीर्ण इति वर्णनम्।

६ सर्गः—सगर्भाया महिष्या वर्णनम्। माघशुक्लत्रयोदश्यां पुष्पनक्षत्रे धर्मनाथस्य जन्माभूदिति वर्णनम्। इन्द्रादिकृतस्य महीपतिकृतस्य च तज्जन्मोत्सवस्य वर्णनम्।

७ सर्गः—जातवेश्मनि स्थिताया महिष्या अङ्के मायानिर्मितमेकं शिशुं निधाय धर्मनाथमपहृत्य शची शक्राय समर्पितवती, शक्रोऽपि तमादाय सुरगजमारुह्य देवसेनासमेतो व्योमवर्त्मना सुमेरुपर्वतं जगामेत्यादि वर्णनम्। सुमेरुपर्वतवर्णनम्। तत्र देवसेनासंनिवेशवर्णनं गजाश्वादिवर्णनं च।

८ सर्गः—सुमेरौ मणिसिंहासने शक्रो धर्मनाथमुपवेशितवानित्यादिवर्णनम्। धर्मनाथाभिषेकोपक्रमवर्णनम्। क्षीरसमुद्रवर्णनम्। धर्मनाथाभिषेकवर्णनम्। इन्द्रादिदेवकृता तत्स्तुतिः। अभिषेकानन्तरं पुनरपि धर्मनाथं तन्मातुर्नृपमहिष्या अङ्के प्रापय्य देवाः स्वानि धामानि जग्मुरिति वर्णनम्।

९ सर्गः—धर्मनाथस्य बाल्यवर्णनं यौवनवर्णनं यौवराज्यप्राप्तिवर्णनं च। विदर्भाधिनाथेन प्रतापराजेन स्वदुहितुः स्वयंवरे धर्मनाथानयनार्थं प्रेषितस्य दूतस्यागमनवर्णनम्। पित्राज्ञयाससैन्यस्य धर्मनाथस्य विदर्भान्प्रति गमनवर्णनम्। मार्गे प्राप्ताया गङ्गाया वर्णनम्।

१० सर्गः—विन्ध्याचलवर्णनम्।

११ सर्गः—षड्ऋतुवर्णनम्।

# काव्यमाला ।

## महाकविश्रीहरिचन्द्रकृतं

## धर्मशर्माभ्युदयम्[1] ।

### प्रथमः सर्गः ।

श्रीनाभिसूनोश्चिरमङ्घ्रियुग्मनखेन्दवः कौ[2] मुदमेधयन्तु ।
यत्रानमन्नाकिनरेन्द्रचक्रचूडाश्मगर्भप्रतिबिम्बमेणः[3] ॥ १ ॥
चन्द्रप्रभं[4] नौमि यदीयभासा नूनं जिता चान्द्रमसी प्रभा सा ।
नो चेत्कथं तर्हि तदङ्घ्रिलग्नं नखच्छलादिन्दुकुटुम्बमासीत् ॥ २ ॥
दुरक्षरक्षोदधियेव धात्र्यां मुहुर्मुहुर्घृष्टललाटपट्टाः ।
यं स्वर्गिणोऽनल्पगुणं प्रणेमुस्तनोतु नः शर्म स धर्मनाथः ॥ ३ ॥
संप्रत्यपापाः स्म इति प्रतीत्यै वह्निविवाह्नाय मिथः प्रविष्टाः ।
यत्कायकान्तौ कनकोज्ज्वलायां सुरा विरेजुस्तमुपैमि शान्तिम्[5] ॥ ४ ॥
भूयादगाधः स विबोधवार्धिर्वीरस्य[6] रत्नत्रय[7]लब्धये वः ।
स्फुरत्पयोबुद्बुदबिन्दुमुद्रामिदं यदन्तस्त्रिजगत्तनोति ॥ ५ ॥

---

१. अस्य कायस्थवंशमुक्तामणेर्दिगम्बरजैनमतानुयायिन आर्द्रदेवसूनोः श्रीहरिचन्द्रमहाकवेः समयः सम्यङ् न ज्ञायते. हरिचन्द्रद्वयं तावत्प्रसिद्धम्—'पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः । भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥' इति हर्षचरितारम्भे बाणभट्टेन वर्णितः प्रथमः, विश्वप्रकाशकोपकर्तुर्महेश्वरस्य पूर्वपुरुषश्चरकसंहिताटीकाकारः साहसाङ्कनृपतेः प्रधानवैद्यो द्वितीयः. अनयोरेवायमप्येकतरस्तृतीयो वेति संदेहः. किंत्वयमपि (धर्मशर्माभ्युदयकर्ता) स्वकवित्वप्रौढ्या माघादिप्राचीनमहाकविकक्षामारोहति, तस्मान्नार्वाचीनः. कर्पूरमञ्जर्यां प्रथमे जवनिकान्तरे एकत्र विदूषकोक्तिव्याजेन राजशेखरोऽपि हरिचन्द्रकविं स्मरति. एकविंशतिसर्गात्मके चास्मिन्महाकाव्ये नगरार्णवशैलर्तुपुष्पावचयजलविहारादिकाव्यवर्णनीयवस्तुवर्णनपुरःसरं चतुर्विंशतिजैनतीर्थकरेषु पञ्चदशतीर्थकरस्य धर्मनाथस्य जन्मप्रभृति निर्वाणान्तं चरितं वर्णितमस्ति. २. कौ पृथिव्याम्, मुदं हर्षम्; (अथ च) कौमुदं कुमुदसमूहम्. ३. वर्तत इति शेषः. ४. अष्टमं तीर्थकरम्. ५. षोडशं तीर्थकरम्. ६. चतुर्विंशतितमं तीर्थकरम्. ७. सम्यग्दर्शनम्, सम्यग्ज्ञानम्, सम्यक्चारित्रं चेति जिनमते रत्नत्रयमुच्यते. रत्नलब्धये समुद्रसेवा समुचितैव.

निर्मार्जिते यत्पदपङ्कजानां रजोभिरन्तः प्रतिबिम्बितानि।
जनाः स्वचेतोमुकुरे जगन्ति पश्यन्ति तान्नौमि मुदे जिनेन्द्रान् ॥ ६ ॥
रत्नत्रयं तज्जननार्तिमृत्युसर्पत्रयीदर्पहरं नमामि।
यद्भूषणं प्राप्य भवन्ति शिष्टा मुक्तेर्विरूपाकृतयोऽप्यभीष्टाः ॥ ७ ॥
त्वद्भक्तिनम्रं जनमाश्रयावः साक्षादिति प्रष्टुमिवोपकर्णम्।
चन्द्राश्मताटङ्कपदात्पदार्थौ यस्याः स्थितौ ध्यायत भारतीं ताम् ॥८॥
जयन्ति ते केऽपि महाकवीनां स्वर्गप्रदेशा इव वाग्विलासाः।
पीयूषनिष्यन्दिषु येषु हर्षं केषां न धत्ते सुरसार्थलीला ॥ ९ ॥
लब्धात्मलाभा बहुधान्यवृद्ध्यै निर्मूलयन्ती घननीरसत्वम्।
सा मेघसंघातमपेतपङ्का शरत्सतां संसदपि क्षिणोतु ॥ १० ॥
वियत्पथप्रान्तपरीक्षणाद्वा तदेतदम्भोनिधिलङ्घनाद्वा।
मात्राधिकं मन्दधिया मयापि यद्वर्ण्यते जैनचरित्रमत्र ॥ ११ ॥
पुराणपारीणमुनीन्द्रवाग्भिर्यद्वा ममाप्यत्र गतिर्भवित्री।
तुङ्गेऽपि सिध्यत्यधिरोहिणीभिर्यद्वामनस्यापि मनोभिलाषः ॥ १२ ॥
श्रीधर्मनाथस्य ततः स्वशक्त्या किंचिच्चरित्रं तरलोऽपि वक्ष्ये।
वक्तुं पुनः सम्यगिदं जिनस्य क्षमेत नो वागधिदेवतापि ॥ १३ ॥
अर्थे हृदिस्थेऽपि कविर्न कश्चिन्निर्ग्रन्थिगीर्गुम्फविचक्षणः स्यात्।
जिह्वाञ्चलस्पर्शमपास्य पातुं श्वा नान्यथाम्भो घनमप्यवैति ॥ १४ ॥
हृद्यार्थवन्ध्या पदबन्धुरापि वाणी बुधानां न मनो धिनोति।
न रोचते लोचनवल्लभापि स्नुहीक्षरत्क्षीरसरिन्नरेभ्यः ॥ १५ ॥
वाणी भवेत्कस्यचिदेव पुण्यैः शब्दार्थसंदर्भविशेषगर्भा।
इन्दुं विनान्यस्य न दृश्यते द्युत्तमोधुनाना च सुधाधुनी च ॥ १६ ॥

१. चन्द्रकान्तमणिनिर्मितकर्णभूषणविशेषव्याजात्. २. सुर-सार्थलीला देवसमूहक्रीडा; (पक्षे) सुरसा अर्थलीला. ३ बहुधा अन्यवृद्ध्यैः; (पक्षे) बहु-धान्यवृद्ध्यैः. ४. घननीरसत्वमत्यन्तरसशून्यत्वम्; (पक्षे) घन-नीर-सत्त्वं मेघजलास्तित्वम्. ५. मे अघसंघातं पापसमूहम्; (पक्षे) मेघ-संघातम्. ६. निष्पापा; विगतकर्दमा च. ७. किंचिदधिकम्. ८. 'निःश्रेणिस्त्वधिरोहिणी' इत्यमरः. ९. 'द्युत्' शब्दः किरणवाचकः.

श्रव्येऽपि काव्ये रचिते विपश्चित्कश्चित्सचेताः परितोषमेति ।
उत्कोरकः स्यात्तिलकश्चलाक्ष्याः कटाक्षभावैरपरे न वृक्षाः ॥ १७ ॥
परस्य तुच्छेऽपि परोऽनुरागो महत्यपि स्वस्य गुणे न तोषः ।
एवंविधो यस्य मनोविवेकः किं प्रार्थ्यते सोऽत्र हिताय साधुः ॥१८॥
साधोर्विनिर्माणविधौ विधातुश्च्युताः कथंचित्परमाणवो ये ।
मन्ये कृतास्तैरुपकारिणोऽन्ये पाथोदचन्द्रद्रुमचन्दनाद्याः ॥ १९ ॥
पराङ्मुखोऽप्येष परोपकारव्यापारभारक्षम एव साधुः ।
किं दत्तपृष्ठोऽपि गरिष्ठधात्रीप्रोद्धारकर्मप्रवणो न कूर्मः ॥ २० ॥
निसर्गशुद्धस्य सतो न कश्चिच्चेतोविकाराय भवत्युपाधिः ।
त्यक्तस्वभावोऽपि विवर्णयोगात्कथं तदस्य स्फटिकोऽस्तु तुल्यः ॥२१॥
खलं विधात्रा सृजता प्रयत्नात्किं सज्जनस्योपकृतं न तेन ।
ऋते तमांसि द्युमणिर्मणिर्वा विना न काचैः स्वगुणं व्यनक्ति ॥ २२ ॥
दोषानुरक्तस्य खलस्य कस्याप्युलूकपोतस्य च को विशेषः ।
अह्नीव सत्कान्तिमति प्रबन्धे मलीमसं केवलमीक्षते यः ॥ २३ ॥
न प्रेम नम्रेऽपि जने विधत्से मित्रेऽपि मैत्रीं खल नातनोषि ।
तदेष किं नेप्यति न प्रदोषस्त्वामञ्जसा सायमिवावसानम् ॥ २४ ॥
श्रव्यं भवेत्काव्यमदूषणं यन्न निर्गुणं क्वापि कदापि मन्ये ।
गुणार्थिनो दूषणमाददानस्ततस्सज्जनाद्दुर्जन एव साधुः ॥ २५ ॥
अहो खलस्यापि महोपयोगः स्नेहद्रुहो यत्परिशीलनेन ।
आ कर्णमापूरितपात्रमेताः क्षीरं क्षरन्त्यक्षतमेव गावः ॥ २६ ॥
आः कोमलालापपरेऽपि मा गाः प्रमादमन्तःकठिने खलेऽस्मिन् ।
शेवालशालिन्युपले छलेन पातो भवेत्केवलदुःखहेतुः ॥ २७ ॥
आदाय शब्दार्थमलीमसानि यद्दुर्जनोऽसौ वदने दधाति ।
तेनैव तस्याननमेव कृष्णं सतां प्रबन्धः पुनरुज्ज्वलोऽभूत् ॥ २८ ॥

---

१. दोषः; (पक्षे) रात्रिः. २. प्रकृष्टो दोषः; रजनीमुखं च. ३. दुर्जनः; तैलरहितस्तिलसर्षपादिपिण्याकश्च.

गुणानधस्तान्नयतोऽप्यसाधुपक्षस्य यावद्दिनमस्तु लक्ष्मीः।
दिनावसाने तु भवेद्गतश्री राज्ञः[1] सभासंनिधिमुद्रितास्यः ॥ २९ ॥
उच्चासनस्थोऽपि सतां न किंचिन्नीचः स चित्तेषु चमत्करोति।
स्वर्णाद्रिशृङ्गाग्रमधिष्ठितोऽपि काको वराकः खलु काक एव ॥ ३० ॥
वृत्तिर्मरुद्द्वीपवतीव[2] साधोः खलस्य वैवस्वतसोदरीव[3]।
तयोः प्रयागे[4] कृतमज्जनो नः प्रबन्धबन्धुर्लभतां विशुद्धिम् ॥ ३१ ॥
अथास्ति जम्बूपपदः पृथिव्यां द्वीपप्रभान्यकृतनाकिलोकः।
यो वृद्धया मध्यगतोऽपि लक्ष्म्या द्वीपान्तराणामुपरीव तस्थौ ॥ ३२ ॥
क्षेत्रच्छदैः पूर्वविदेहमुख्यैरधःस्थितस्फारफणीन्द्रदण्डः।
चकास्ति रुक्माचलकर्णिको यः सद्म श्रियः पद्म इवाब्धिमध्ये॥३३॥
द्वीपेषु यः कोऽपि करोति गर्वं मयि स्थितेऽप्यस्तु स मे पुरस्तात्।
इतीव येन ग्रहकङ्कणाङ्को हस्तो व्युदस्तास्त्रिदशाद्रिदम्भात् ॥ ३४ ॥
पश्यन्तु संसारतमस्यपारे सन्तश्चतुर्वर्गफलानि सर्वे।
इतीव यो द्विर्द्विर्दिवाकरेन्दुव्याजेन[5] धत्ते चतुरः प्रदीपान् ॥ ३५ ॥
अवाप्य सर्पाधिपमौलिमैत्रीं छत्रद्युतिं तन्वति यत्र वृत्ते।
धत्ते ससुत्तेजितशातकुम्भकुम्भप्रभां कांचन काञ्चनाद्रिः ॥ ३६ ॥
सम्यक्त्वपाथेयमवाप्यते चेदृजुस्तदस्मादपवर्गमार्गः।
इतीव लोके निगदत्युदस्तशैलेन्द्रहस्ताङ्गुलिसंज्ञया यः ॥ ३७ ॥
पातुं बहिर्मारुतमङ्कसुप्तलक्ष्मीलसत्कुङ्कुमपङ्कपीतः।
यदन्तरुद्भिद्य महीमहीनामभ्युत्थितो नाथ इवास्ति मेरुः ॥ ३८ ॥
चकास्ति पर्यन्तपतत्पतंगे यत्राम्बरं दीप इवोपरिष्टात्।
कयापि शृङ्गाग्रवनाङ्गनानां जिघृक्षया पात्रमिव प्रदत्तम् ॥ ३९ ॥
द्यावापृथिव्योः पृथुरन्तरे यः कृतास्थितिः स्थूलरथाङ्गकान्त्योः।
युगानुकारिध्रुवमण्डलश्रीरूर्ध्वो रथस्याक्ष इवावभाति ॥ ४० ॥

---

१. चन्द्रस्य च. २. मरुतां देवानां द्वीपवती नदी (गङ्गा). ३. यमुना. ४. गङ्गायमुनासंगमरूपे तीर्थविशेषे. ५. जैनमते सूर्यचन्द्रौ नक्षत्राणि च द्विगुणानि सन्ति. 'द्वौ द्वौ रवीन्दू भगणौ च तद्वदेकान्तरौ तावुदयं व्रजेताम्। यदब्रुवन्नेवमनम्बराद्या ब्रवीम्यतस्तान्प्रति युक्तियुक्तम् ॥' इति सिद्धान्तशिरोमणौ गोलाध्याये श्रीभास्कराचार्यः.

तद्दक्षिणं भारतमस्ति तस्य क्षेत्रं जिनेन्द्रागमवारिसेकात् ।
स्वर्गादिसंपत्फलशालि यत्र निष्पद्यते पुण्यविशेषसस्यम् ॥ ४१ ॥

यस्मिन्सिन्धुगङ्गान्तरवर्तिनोच्चैः शैलेन भिन्नं विजयार्धनाम्ना ।
भारेण लक्ष्म्या इव दुर्वहेन बभूव षट्खण्डमखण्डशोभम् ॥ ४२ ॥

तत्रार्यखण्डं त्रिदिवात्कथंचिच्च्युतं निरालम्बतयेव खण्डम् ।
ललामवन्मण्डयति स्वकान्त्या देशो महानुत्तरकोशलाख्यः ॥ ४३ ॥

अनेकपद्माप्सरसः[1] समन्ताद्यस्मिन्नसंख्यातहिरण्यगर्भाः[2] ।
अनन्तपीताम्बरधामरम्या[3] ग्रामा जयन्ति त्रिदिवप्रदेशान् ॥ ४४ ॥

यन्त्रप्रणालीचषकैरजस्रमापीय पुण्ड्रेक्षुरसासवौघम् ।
मन्दानिलान्दोलितशालिपूर्णा विघूर्णते यत्र मदादिवोर्वी ॥ ४५ ॥

विस्तार्य तारा रभसान्निशि द्यौः पुनः पुनर्यद्दिवसे प्रमार्ष्टि ।
उत्पुण्डरीकैः किल यत्सरोभिः स्वं लब्धसाम्यं तदमन्यमाना ॥ ४६ ॥

उत्पालिकाभूस्तिमितैस्तडागचक्षुःसहस्रैरिव विस्मयेन ।
यद्वैभवं भूरपि वीक्ष्य धत्ते रोमाञ्चमुद्यत्कलमच्छलेन ॥ ४७ ॥

जनैः प्रतिग्राममसमीपमुच्चैः कृता वृषाढ्यैर्वरधान्यकूटाः ।
यत्रोदयास्ताचलमध्यगस्य विश्रामशैला इव भान्ति भानोः ॥ ४८ ॥

नीरान्तरात्तप्रतिमावतारास्तरङ्गिणीनां तरवस्तटेषु ।
विभान्ति यत्रोर्ध्वगतार्कतापात्कृतप्रयत्ना इव मज्जनाय ॥ ४९ ॥

सस्यस्थलीपालकबालिकानामुल्लोलगीतश्रुतिनिश्चलाङ्गम् ।
यत्रैणयूथं पथि पान्थसार्थाः सल्लेप्यलीलामयमामनन्ति ॥ ५० ॥

आस्कन्धमृज्वी तदनल्पपत्रप्रसूनशाखावलया द्रुमाली ।
मयूरपत्रग्रथितातपत्रश्रीर्यस्य देशाधिपतित्वमाह ॥ ५१ ॥

---

१. अनेकानि पद्मयुक्तानि जलतडागानि येषु. स्वर्गे च पद्मा लक्ष्मीः, अप्सरसो रम्भाद्याः. २. असंख्यातं हिरण्यं सुवर्णं गर्भे येषाम्. हिरण्यगर्भश्च ब्रह्मा. ३. पीतमम्बरं यैस्तादृशैर्धामभी रम्याः. असंख्यैरभ्रंकषप्रासादैः शोभमाना इत्यर्थः. स्वर्गे च पीताम्बरस्य विष्णोर्धाम. ४. तडागस्य समन्ताज्जलबन्धनार्थं निर्मितो मृत्कूटः. ५. वृषो धर्मस्तद्युक्ताः पुरुषा मार्गमध्ये पान्थविश्रमार्थं स्थलानि कुर्वन्ति.

यत्रालिमाला स्थलपङ्कजानां सौरभ्यलोभादभितो भ्रमन्ती ।
विभाति लोलाध्वगलोचनानां बन्धाय सिद्धायसशृङ्खलेव ॥ ५२ ॥
यं तादृशं देशमपास्य रम्यं यत्क्षारमब्धिं सरितः समीयुः ।
बभूव तेनैव जडाशयानां तासां प्रसिद्धं किल निम्नगात्वम् ॥ ५३ ॥
भूकण्ठलोठन्नवपुण्डरीकस्रग्बन्धुरा गोधनधोरणी या ।
सा यस्य दिङ्मण्डलमण्डनाय विस्तारिणी कीर्तिरिवावभाति ॥ ५४ ॥
कल्पद्रुमान्कलिपतदानशालिञ्जेतुं किलोत्तालपतत्त्रिनादैः ।
आहूय दूराद्वितरन्ति वृक्षा फलान्यचिन्त्यानि जनाय यत्र ॥ ५५ ॥
तत्रास्ति तद्रत्नपुरं पुरं यद्द्वारस्थलीतोरणवेदिमध्यम् ।
अलंकरोत्यर्कतुरंगपङ्क्तिः कदाचिदिन्दीवरमालिकेव ॥ ५६ ॥
मुक्तामया[1] एव जनाः समस्तास्तास्ताः स्त्रियो या नवपुष्परागाः[2] ।
वज्रं[3] द्विषां मूर्ध्नि नृपोऽपि यस्य वितन्वते नाम विनिश्चितार्थम् ॥५७॥
भोगीन्द्रवेश्मेदमिति प्रसिद्ध्या यद्भ्रमवेषः किल पाति शेषः ।
तथाहि दीर्घान्तिकदीर्घिकास्यं निर्मुक्तनिर्मोकनिभा विभाति ॥ ५८ ॥
समेत्य यस्मिन्मणिबद्धभूमौ पौराङ्गनानां प्रतिबिम्बदम्भात् ।
मन्ये न रूपामृतलोलुपाक्ष्यः पातालकन्याः सविधं त्यजन्ति ॥ ५९ ॥
प्रासादशृङ्गेषु निजप्रियार्त्या हेमाण्डकप्रान्तमुपेत्य रात्रौ ।
कुर्वन्ति यत्रापरहेमकुम्भभ्रमं द्युगङ्गाजलचक्रवाकाः ॥ ६० ॥
शुभ्रा यदभ्रंलिहमन्दिराणां लग्ना ध्वजाग्रेषु न ताः पताकाः ।
किं तु त्वचो घट्टनतः सितांशोर्नो चेत्किमन्तर्व्रणकालिकास्य ॥ ६१ ॥
कृताप्यधो भोगिपुरी कुतोऽभूदहीनभूषेत्यतिकोपकम्प्रम् ।
यज्जेतुमेतामिव खातिकाम्भश्छायाछलात्क्रामति नागलोकम् ॥ ६२ ॥
संक्रान्तबिम्बः स्रवदिन्दुकान्ते नृपालये प्राहरिकैः परीते ।
हृताननश्रीः सुदृशां चकास्ति काराधृतो यत्र रुदन्निवेन्दुः ॥ ६३ ॥

---

१. नीरोगाः; मौक्तिकप्रचुराश्च. २. पुष्परागो मणिभेदः; (स्त्रीपक्षे तु) वपुषि शरीरेऽरागा रागरहिता न. ३. वज्रमशनिः; हीरकश्च. ४. बहुभूषणयुक्ता; (पक्षे) अहीनामिनः सर्पराजः. ५. परिखा.

विभाति रात्रौ मणिकुट्टिमोर्वी संजाततारापतिमावतारा ।
दिदृक्षया यत्र विचित्रभूतेरुत्तानिताक्षीव कुतूहलेन ॥ ६४ ॥
दृङ्निर्निमेषा द्युसदां पतन्ती दोषाय मा भूदिति यस्य रात्र्या ।
उत्तार्यते मूर्ध्नि जितामरस्य नीराजनापात्रमिवेन्दुबिम्बम् ॥ ६५ ॥
दन्दह्यमानागुरुधूमवर्तिप्रवर्तिते व्योम्नि घनान्धकारे ।
सौधेषु यत्रोर्ध्वनिविष्टहेमकुम्भप्रभा भाति तडिल्लतेव ॥ ६६ ॥
यत्रोच्चकैश्चैत्यनिकेतनानां कूटस्थलीकृत्रिमकेसरिभ्यः ।
रात्रिंदिवं भीत इवान्तरिक्षे भ्राम्यत्युपात्तैकमृगो मृगाङ्कः ॥ ६७ ॥
यत्रोच्चहर्म्येषु पतत्सपद्मव्योमापगापूरसहस्रशङ्काम् ।
वितन्वते काञ्चनकुम्भशोभासंभाव्यमानाः सितवैजयन्त्यः ॥ ६८ ॥
यत्राश्मगर्भोज्ज्वलवेश्मभित्तिप्रभाभिराक्रान्तनभस्तलाभिः ।
दिवापि वापीपुलिने वराकी रात्रिभ्रमात्ताम्यति चक्रवाकी ॥ ६९ ॥
मरुच्चलत्केतुकराङ्गुलीभिः संतर्जितानीव सिषेविरे यत् ।
अतुच्छशाखानगरच्छलेन चतुर्दिगन्ताधिपपत्तनानि ॥ ७० ॥
रत्नाण्डकैः शुभ्रसहस्रकूटान्याभान्ति यस्मिञ्जिनमन्दिराणि ।
तद्दृष्टुमुर्वीतलनिर्गताहिभर्त्रा कृतानीव वपूंषि हर्षात् ॥ ७१ ॥
उदेति पातालतलात्सुधायाः सिरासहस्रं सरसीषु यत्र ।
मन्ये ततस्तासु रसाधिकत्वं मुञ्चत्युपान्तं न च भोगिवर्गः ॥ ७२ ॥
मन्थाचलामूलविलोडितान्तर्लब्धैकसत्कौस्तुभदृष्टसारः ।
रत्नाकरः स्याज्जलधिः कुतस्तत्सेवेत नैतत्परिखामिषाच्चेत् ॥ ७३ ॥
इतीव भाःस्तम्भितकौस्तुभानां स्तूपान्निरूप्य ज्वलतां मणीनाम् ।
आक्रीडशैलानिव यत्र लक्ष्म्याः प्रत्येति दूरापणिकोऽपि लोकः ॥ ७४ ॥ (युग्मम्)
पदे पदे यत्र परार्थनिष्ठा रसस्थितिं कामपि नाटयन्त्यः ।
वाचः कवीनामिव कस्य नोच्चैश्चेतोमुदं कन्दलयन्ति वेश्याः ॥ ७५ ॥

---

१. अश्मगर्भो हरिन्मणिः.

संगीतकारम्भरसन्मृदङ्गाः कैलासभासो वलभीनिवेशाः।
वृन्दानि यत्र ध्वनदम्बुदानामनम्बुशुभ्राणि विडम्बयन्ति ॥ ७६ ॥
रणज्झणत्किङ्किणिकारवेण संभाष्य यत्राम्बरमार्गखिन्नम्।
मरुच्चलत्केतनतालवृन्तैर्हर्म्यावली वीजयतीव मित्रम् ॥ ७७ ॥
हारावलीनिर्झरहारि तुङ्गमवाप्य कान्तास्तनशैलदुर्गम्।
यत्र त्रिनेत्रादपि निर्विशङ्कः शङ्के स्मरो भूत्रयदुर्धरोऽभूत् ॥ ७८ ॥
केशेषु भङ्गस्तरलत्वमक्ष्णोः सरागता केवलमोष्ठयोश्च।
मुक्त्वा तदास्यं सुदृशां न यत्र दोषाकरच्छायमवैमि किंचित् ॥७९॥
रात्रौ तमःपीतसितेतराश्मवेश्माग्रभाजामसितांशुकानाम्।
स्त्रीणां मुखैर्यत्र नवोदितेन्दुमालाकुलेव क्रियते नभःश्रीः ॥ ८० ॥
मद्वाजिनो नोर्ध्वधुरा रथेन प्राकारमारोढुममुं क्षमन्ते।
इतीव यल्लङ्घयितुं दिनेशः श्रयत्यवाचीमथ चाप्युदीचीम् ॥ ८१ ॥
नीलाश्मलीलावलभीषु जालव्यालम्बमानैर्निशि चन्द्रपादैः।
प्रतारिता यत्र न मुग्धवध्वो हारावचूलेष्वपि विश्वसन्ति ॥ ८२ ॥
उपर्युपारूढवधूमुखेन्दूनुदीक्ष्य मन्दाक्षमुपैति नूनम्।
यत्रोच्चसौधोच्चयचूलिकाभ्यो नम्रीभवन्निन्दुरतः प्रयाति ॥ ८३ ॥
प्रालेयशैलेन्द्रविशालशालश्रोणीसमालम्बितवारिवाहम्।
विराजते निर्जरराजधानीमुड्डीय यज्जेतुमिवात्तपक्षम् ॥ ८४ ॥

अगुरुरिति सुगन्धिद्रव्यभेदे प्रसिद्धिः
संततमविभवोऽपि प्रेक्ष्यते मेष एव।
फलसमयविरुद्धा यत्र वृक्षानपास्य
क्वचिदपि न कदाचित्केनचित्केऽपि दृष्टाः ॥ ८५ ॥

अन्तःस्थितप्रथितराजविराजमानो
यः प्रान्तभूवलयिता पृथुसालबन्धः।

---

१. लोकत्रयजित्वरः. २. श्रोणी मध्यभागः. ३. अविभवो विभवरहितः; (पक्षे) अविर्मेषस्तदुत्पन्नः. ४. वृक्षपक्षे विभिः पक्षिभी रुद्धाः.

प्रत्यर्थिनाशपिशुनः परिपूर्णमूर्ते-
रिन्दोरुदारपरिवेष इवावभाति ॥ ८६ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

अभूदथेक्ष्वाकुविशालवंशभूः स तत्र मुक्तामयविग्रहः पुरे ।
नृपो महासेन इति स्वमेव यः कुलं द्विषन्मूर्धमदोऽप्यभूषयत् ॥ १ ॥
गतेऽपि दृग्गोचरमत्र शात्रवः स्त्रियोऽपि कंदर्पमपत्रपा दधुः ।
किमद्भुतं तद्धतपञ्चसायके यदद्रवन्संगरसंगताः क्षणात् ॥ २ ॥
न केवलं दिग्विजये चलच्चमूभरभ्रमद्भूवलयेऽस्य जङ्गमैः ।
श्रिताहितत्राणकलङ्कशङ्कितैरिव स्थिरैरप्युदकम्पि भूधरैः ॥ ३ ॥
तदङ्गरूपामृतमक्षिभाजनैर्यदृच्छयासेचनकं पपुः स्त्रियः ।
प्रमातुमन्तस्तदपारयन्मनाग्बुदश्रुदम्भान्निरगादिवाङ्गतः ॥ ४ ॥
कुलेऽपि किं तात तवेदृशी स्थितिर्यदात्मजा श्रीर्न सभास्वपि त्यजेत् ।
तदङ्कलीलामिति कीर्तिरीर्ष्यया ययावुपालब्धुमिवास्य वारिधिम् ॥ ५ ॥
तदा तदुत्तुङ्गतुरंगमक्रमप्रहारमज्जन्मणिशङ्कुसंहताम् ।
न भूरिबाधाविधुरोऽप्यपोहितुं प्रगल्भतेऽद्यापि महीमहीश्वरः ॥ ६ ॥
विभान्त्यमी शत्रुनिमज्जनोत्थितास्तदादि तस्यासिजलस्य बिन्दवः ।
न तारका व्योम्नि कुतोऽन्यथा भवेज्झषः कुलीरो मकरश्च तास्वपि ॥ ७ ॥
वितीर्णमस्मभ्यमनेन संयुगे पुनः कुतो लब्धमितीव कौतुकात् ।
स कस्य पृष्ठं न नतारिभूभुजः कराग्रसंस्पर्शमिषाद्व्यलोकयत् ॥ ८ ॥
न मन्त्रिणस्तन्त्रजुषोऽपि रक्षितुं क्षमाः स्वमेतद्भुजगादसेः क्वचित् ।
इतीव भीताः शिरसि द्विषो दधुस्तदङ्घ्रिचञ्चन्नखरत्नमण्डलम् ॥ ९ ॥

---

१. शात्रवः कं दर्पमभिमानम्. पत्रं वाहनं पान्तीति पत्रपाः, न पत्रपाः अपत्रपाः. वाहनरहिता इत्यर्थः; स्त्रियश्चापगतत्रपाः सत्यः कंदर्पं कामं दधुः. २ सङ्गरसं गताः; संगर-संगताः. ३. 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्'. ४. भुजं प्राप्तात्; (पक्षे) सर्पात्.

अतुच्छमच्छाद्यमहो महस्विनां पयोदकाले तदसौ समुद्यते ।
नवाम्बुधाराविनिपातजर्जरैर्न राजहंसैर्न पलायितं जवात् ॥ १० ॥
समुल्लसत्खड्गलतापहस्तितक्रमं धरित्री समवाप्य तद्भुजम् ।
विषाग्निगर्भैः श्वसितैरिवाकुला मुमोच मैत्रीं फणिचक्रवर्तिनः ॥ ११ ॥
नियोज्य कर्णोत्पलवज्जयश्रिया कृपाणमस्योपगमे समिद्गृहे ।
प्रतापदीपाः शमिता विरोधिनामहो सलज्जा नवसंगमे स्त्रियः ॥ १२ ॥
असक्तमाकारनिरीक्षणादपि क्षणादभीष्टार्थकृतार्थितार्थिनः ।
कुतश्चिदातिथ्यमियाय कर्णयोर्न तस्य देहीति दुरक्षरद्वयम् ॥ १३ ॥
उपासनायास्य बलाभियोगतः प्रकम्पमानाः कुलपर्वता इव ।
समाययुर्द्वारि मदाम्बुनिर्झराः क्षितीश्वरोपायनमत्तदन्तिनः ॥ १४ ॥
निपीतमातङ्ग[1]घटाग्रशोणिता हठावगूढा सुरतार्थिभि[2]र्भटैः ।
किल प्रतापानलमासदत्समि[3]त्समृद्धमस्यासिलतात्म[5]शुद्धये ॥ १५ ॥
ततः श्रुताम्भोनिधिपारदृश्वनो विशङ्कमानेव पराभवं तदा ।
विशेषपाठाय विधृत्य पुस्तकं करान्न मुञ्चत्यधुनापि भारती ॥ १६ ॥
बभुस्तदस्त्राहतदन्तमण्डलात्समुच्छलन्तो हुतभुक्कणाः क्षणम् ।
सरक्तवान्ता वरवैरिवारणव्रजस्य जीवा इव संगराजिरे ॥ १७ ॥
श्रुतं च शीलं च बलं च यत्त्रयं स सर्वदौदार्यगुणेन संदधत् ।
चतुष्कमापूरयति स्म दिग्जयप्रवृत्तकीर्तेः प्रथमं सुमङ्गलम् ॥ १८ ॥
तदीयनिस्त्रिंशलसद्विधुंतुदे बलाद्वि[4]लैत्युद्यतराजमण्डलम् ।
निमज्ज्य धारासलिले स्वसुच्चकैर्ददुर्द्वि[6]जेभ्यः प्रविभज्य विद्विषः ॥ १९ ॥
उदर्कवक्रां वनितास्वभावतो विभाव्य विस्रम्भमधारयन्निव ।
व्यशिश्रणद्वैरिकुलाद्बलाहृतां स्वसंमतेभ्यो बहिरेव स श्रियम् ॥ २० ॥
विदारितारिद्विपगण्डमण्डलीसमुल्लसल्लोलशिलीमुखच्छलात् ।
कचेषु खड्गः क्रमकिंकरीमिव क्रुधा चकर्षास्य जयश्रियं रणे ॥ २१ ॥

---

१. मातङ्गघटा हस्तिसमूहः; (पक्षे) मातङ्गघटश्चण्डालकुम्भः. २. देवत्वार्थिभिः; (पक्षे) निधुवनार्थिभिः. ३. समिति युद्धे समृद्धम्; (पक्षे) समिद्भिः काष्ठैः. ४. नृपसमूहम्; चन्द्रबिम्बं च. ५. आत्मानम्; धनं च. ६. पक्षिभ्यः; ब्राह्मणेभ्यश्च.

मधुमांसासवासक्त्यावगणय्य जिनागमम् । १६७
कौलादिदाम्भिकाचार्यसपर्याकारि यत्त्वया ॥ २८ ॥
तस्येदं भुज्यतां पक्वं फलमित्यसुरामराः ।
उत्कृत्योत्कृत्य तन्मांसं तन्मुखे प्रक्षिपन्त्यमी ॥ २९ ॥
पाययन्ति च निस्त्रिंशाः प्रतप्तकललं मुहुः ।
घ्नन्ति बध्नन्ति मथ्नन्ति क्रकचैर्दारयन्ति च ॥ ३० ॥
खण्डनं ताडनं तत्रोत्कर्तनं यन्त्रपीडनम् ।
किं किं दुष्कर्मणः पाकात्सहन्ते ते न दुःसहम् ॥ ३१ ॥
कृता श्वभ्रगतेर्भेदात्तत्स्वरूपनिरूपणा ।
व्यावर्ण्यते कियानस्या भेदस्तिर्यग्गतेरपि ॥ ३२ ॥
तिर्यग्योनिर्द्विधा जीवस्त्रसस्थावरभेदतः ।
त्रसा द्वित्रिचतुःपञ्चकरणाः स्युश्चतुर्विधाः ॥ ३३ ॥
स्पर्शसाधारणेष्वेषु नूनमेकैकमिन्द्रियम् ।
वर्धते रसनं घ्राणं चक्षुः श्रोत्रमिति क्रमात् ॥ ३४ ॥
वर्षाणि द्वादशैवायुर्मानं द्वादशयोजनम् ।
विवृणोति प्रकर्षेण जीवो द्वीन्द्रियविग्रहः ॥ ३५ ॥
दिनान्येकोनपञ्चाशदायुरुत्र्यक्षे शरीरिणि ।
पादोनयोजनं मानं जिनाः प्राहुः प्रकर्षतः ॥ ३६ ॥
आयुर्योजनमानस्य चतुरक्षस्य देहिनः ।
षण्मासप्रमितं प्रोक्तं जिनैः केवललोचनैः ॥ ३७ ॥
सहस्रमेकमुत्सेधो योजनानां प्रकीर्तितः ।
पूर्वकोटिमितं चायुः पञ्चेन्द्रियशरीरिणाम् ॥ ३८ ॥
पृथिवीमारुताप्तेजोवनस्पतिविभेदतः ।
अद्वितीयेन्द्रियाः सर्वे स्थावराः पञ्चकायिकाः ॥ ३९ ॥
द्वाविंशतिः सहस्राणि वर्षाणामायुरादिमे ।
द्वितीये त्रीणि सप्त स्यात्तृतीयेऽपि यथाक्रमम् ॥ ४० ॥

---

१. त्रसाश्चराः.

महा[1]नदीनोऽप्यजडाशयो जगत्य[2]नष्टसिद्धिः परमेश्वरोऽपि सन् ।
बभूव रा[3]जापि निकारकारणं वि[4]भावरीणामयमद्भुतोदयः ॥ ३३ ॥
तरङ्गिताम्भोधिदुकूलशालिनीमखर्वपूर्वापरपर्वतस्तनीम् ।
वरोरुदेशे स निधाय कोमलं करं बुभोजैकवधूमिव क्षितिम् ॥ ३४ ॥
अथास्य पत्नी निखिलावनीपतेर्बभूव नाम्ना चरितैश्च सुव्रता ।
स्थितेऽवरोधे प्रचुरेऽपि या प्रभोरभूत्सुधांशोरिव रोहिणी प्रिया ॥ ३५ ॥
सुधासुधारश्मिमृणालमालतीसरोजसारैरिव वेधसा कृतम् ।
शनैः शनैर्मौग्ध्यमतीत्य सा दधौ सुमध्यमा मध्यममध्यमं वयः ॥ ३६ ॥
स्मरेण तस्याः किल चारुतारसं जनाः पिबन्तः शरजर्जरीकृताः ।
स पीतमात्रोऽपि कुतोऽन्यथागलत्तदङ्गतः स्वेदजलच्छलाद्बहिः ॥ ३७ ॥
इतः प्रभृत्यम्ब न ते मुखाम्बुजश्रियं हरिष्येऽहमितीव चन्द्रमाः ।
प्रतीतयेऽस्याः सकुटुम्बको नखच्छलेन साध्व्याश्चरणाग्रमस्पृशत् ॥ ३८ ॥
प्रयाणलीलाजितराजहंसकं विशुद्धपार्ष्णि विजिगीषुवत्स्थितम् ।
तदङ्घ्रिमालोक्य न कोपदण्डभाग्भियेव पद्मं जलदुर्गमत्यजत् ॥ ३९ ॥
सुवृत्तमप्याप्तजडोरुसंगमं तदीयजङ्घायुगलं विलो[5]मताम् ।
तथा दधावप्यनुयायिनं जनं चकार पञ्चेषुकदर्थितं यथा ॥ ४० ॥
उदञ्चदुच्चैःस्तनवप्रशालिनस्तदङ्गकंदर्पविलासवेश्मनः ।
वरोरुयुग्मं नवतप्तकाञ्चनप्रपञ्चितस्तम्भनिभं व्यराजत ॥ ४१ ॥
जडं गुरूकृत्य नितम्बमण्डलं स्मरेण तस्याः किल शिक्षितं कियत् ।
तथाप्यहो पश्यत सर्वतोऽमुना बुधाधिपानामपि खण्डितो मदः ॥ ४२ ॥
गभीरनाभिह्रदमज्जदुद्धुरस्मरप्रभिन्नद्विपगण्डमण्डलात् ।
समुच्चलन्तीव मधुव्रतावलिर्बभौ तदीयोदररोममञ्जरी ॥ ४३ ॥
सुवृत्तमावेकत उन्नतौ स्तनौ गुरुर्नितम्बोऽप्ययमन्यतः स्थितः ।
कथं भजे कान्तिमितीव चिन्तया ततान तन्मध्यमतीव तानवम् ॥ ४४ ॥

१. महान्-अदीनः; महा-नदी-इनः. २. अष्टसिद्धिरहितः; (पक्षे) न नष्टा सिद्धिर्यस्य सः. ३. चन्द्रोऽपि. ४. रात्रीणाम्; (पक्षे) अरीणां शत्रूणां विभौ स्वामिनि. ५. लोमरहितत्वम्; वैपरीत्यं च.

सती च सौन्दर्यवती च पुंवरप्रसूश्च साक्षादियमेव भूत्रये ।
इतीव रेखात्रयमक्षतस्मयो विधिश्चकारात्र बलित्रयच्छलात् ॥ ४५ ॥
गुरोर्नितम्बादिह कामिकं गतः स नाभितीर्थे प्रमथेशनिर्जितः ।
समुल्लसल्लोमलतारुरुच्छविः स्मरस्त्रिदण्डं त्रिवलिच्छलाद्दधौ ॥ ४६ ॥
कृतौ न चेत्तेन विरञ्चिना सुधानिधानकुम्भौ सुदृशः पयोधरौ ।
तदङ्गलग्नोऽपि तदा निगद्यतां स्मरः परासुः कथमाशु जीवितः ॥ ४७ ॥
सुरस्रवन्तीकनकारविन्दिनीमृणालदण्डाविव कोमलौ भुजौ ।
करौ तदग्रे शुचिकङ्कणाङ्कितौ व्यराजतामब्जनिभौ च सुभ्रुवः ॥ ४८ ॥
सपाञ्चजन्यः कररुक्मकङ्कणप्रभोल्बणः स्याद्यदि कैटभद्विपः ।
स्फुरत्त्रिरेखं किल कण्ठकन्दलं तदोपमीयेत न वा नतभ्रुवः ॥ ४९ ॥
कपोलहेतोः खलु लोलचक्षुषो विधिर्व्यधात्पूर्णसुधाकरं द्विधा ।
विलोक्यतामस्य तथाहि लाञ्छनच्छलेन पश्चात्कृतसीवनव्रणम् ॥ ५० ॥
प्रवालबिम्बीफलविद्रुमादयः समा बभूवुः प्रभयैव केवलम् ।
रसेन तस्यास्त्वधरस्य निश्चितं जगाम पीयूषरसोऽपि शिष्यताम् ॥ ५१ ॥
अनादरेणापि सुधासहोदरीमुदीरयन्त्यामविकारिणीं गिरम् ।
ह्रियेव काष्ठत्वमियाय वल्लकी पिकी च कृष्णत्वमधारयत्तराम् ॥ ५२ ॥
ललाटलेखाशकलेन्दुनिर्गलत्सुधोरुधारेव घनत्वमागता ।
तदीयनासा द्विजरत्नसंहतेस्तुलेव कान्त्या जगदप्यतोलयत् ॥ ५३ ॥
जितास्मदुत्तंसमहोत्पलैर्युवां क्व याथ इत्यध्वनिरोधिनोरिव ।
उपात्तकोपे इव कर्णयोः सदा तदीक्षणे जग्मतुरन्तशोणताम् ॥ ५४ ॥
इमामनालोचनगोचरां विधिर्विधाय सृष्टेः कलशार्पणोत्सुकः ।
लिलेख वक्त्रे तिलकाङ्कमध्ययोर्भ्रुवोर्मिषादोमिति मङ्गलाक्षरम् ॥ ५५ ॥
उदीरिते श्रीरतिकीर्तिकान्तिभिः श्रयाम एतामिति मौनवान्विधिः ।
लिलेख तस्यां तिलकाङ्कमध्ययोर्भ्रुवोर्मिषादोमिति संगतोत्तरम् ॥ ५६ ॥
कपोललावण्यमयाम्बुपल्वले पतत्सतृष्णाखिलनेत्रपत्रिणाम् ।
ग्रहाय पाशाविव वेधसा कृतौ तदीयकर्णौ पृथुलांसचुम्बिनौ ॥ ५७ ॥

स्मरेण कालागुरुपत्रवल्लिवल्ललाटलेखामिषतो नतभ्रुवः।
अशेषसंसारविशेषकैर्गुणैर्जगत्त्रये पत्रमिवावलम्बितम् ॥ ५८ ॥
अनिन्द्यदन्तद्युतिफेनिलाधरप्रवालशालिन्युरुलोचनोत्पले।
तदास्यलावण्यसुधोदधौ बभुस्तरङ्गभङ्गा इव भङ्गुरालकाः ॥ ५९ ॥
तदाननेन्दोरधिरोहता तुलां मृगाङ्क चित्तेऽपि न लज्जितं त्वया।
यतोऽसि कस्तत्र पयोधरोन्नतौ स मूढ यत्राभ्यधिकं व्यराजत ॥ ६० ॥
समग्रसौन्दर्यविधिद्विषो विधेर्घुणाक्षरन्यायवशादसावभूत्।
तदास्य जाने निपुणत्वमीदृशीमनन्यरूपां कुरुते यदापराम् ॥ ६१ ॥
सरस्वतीवार्थमनिन्द्यलक्षणा गुणान्विता चापलतेव धन्विनम्।
विभेव भास्वन्तमतीव निर्मला तमेकभूपालमलंचकार सा ॥ ६२ ॥
अथैकदान्तःपुरसारसुन्दरीशिरःस्रजं तामवलोक्य तत्पतिः।
इति स्थिरोत्तानितनेत्रमर्थिनामचिन्त्यचिन्तामणिरप्यचिन्तयत् ॥ ६३ ॥
चकार यो नेत्रचकोरचन्द्रिकामिमामनिन्द्यां विधिरन्य एव सः।
कुतोऽन्यथा वेदनयान्वितात्ततोऽप्यभूदमन्दद्युति रूपमीदृशम् ॥ ६४ ॥
हैमोत्पलात्सौरभमिक्षुकाण्डतः फलं मनोज्ञां मृगनाभितः प्रभाम्।
विधातुमस्या इव सुन्दरं वपुः कुतो न सारं गुणमाददे विधिः ॥ ६५ ॥
वपुर्वयोवेषविवेकवाग्मिताविलासवंशव्रतवैभवादिकम्।
समस्तमप्यत्र चकास्ति तादृशं न यादृशं व्यस्तमपीक्ष्यते क्वचित् ॥ ६६ ॥
न नाकनारी न च नागकन्यका न च प्रिया काचन चक्रवर्तिनः।
अभूद्भविष्यत्यथवास्ति साध्विमां यदङ्गकान्त्योपमिमीमहे वयम् ॥ ६७ ॥
असारसंसारमरुस्थलीभ्रमक्लमार्त्तहृन्नेत्रपतत्रिणां मुदे।
मृगीदृशः सिक्त इवामृतद्रवैरहो प्रवृद्धो नवयौवनद्रुमः ॥ ६८ ॥
फलं तथाप्यत्र यथर्तुगामिनः सुताह्वयं नोपलभामहे वयम्।
अनन्यसक्तावनिभारखिन्नवन्निरन्तरं तेन मनो दुनोति नः ॥ ६९ ॥
सहस्रधा सत्यपि गोत्रजे जने सुतं विना कस्य मनः प्रसीदति।
अपीद्धताराग्रहगर्भितं भवेद्दते विधोर्ध्यामलमेव दिङ्मुखम् ॥ ७० ॥

१. सरस्वती; पीडा च. २. कर्णिकारपुष्पात्. ३. श्यामलम्.

चन्दनेन्दीवरहारयष्टयो न चन्द्ररोचींषि न चामृतच्छटाः ।
सुताङ्गसंस्पर्शसुखस्य निस्तुलां कलामयन्ते खलु षोडशीमपि ॥ ७१ ॥
असावनालोक्य कुलाङ्कुरं मम स्वभोगयोग्याश्रयभङ्गशङ्किनी ।
विशोषयत्युच्छ्वसितैरसंशयं मदन्वयश्रीः करकेलिपङ्कजम् ॥ ७२ ॥
नभो दिनेशेन नयेन विक्रमो वनं मृगेन्द्रेण निशीथमिन्दुना ।
प्रतापलक्ष्मीबलकान्तिशालिना विना न पुत्रेण च भाति नः कुलम् ॥७३॥
क्व यामि तत्किं नु करोमि दुष्करं सुरेश्वरं वा कमुपैमि कामदम् ।
इतीष्टचिन्ताचयचक्रचालितं क्वचिन्न चेतोऽस्य बभूव निश्चलम् ॥ ७४ ॥

इत्थं चिन्तयतोऽथ तस्य नृपतेः स्फारीभवच्चक्षुषो
निर्वातस्तिमितारविन्दसरसीसौन्दर्यमुद्रामुपः ।
कोऽप्युद्यत्पुलकाङ्कुरः प्रमदजैः सिक्तश्च नेत्राम्बुभि-
र्बीजावाप इवाप वाञ्छिततरोरुद्यानपालः स तम् ॥ ७५ ॥

अथ स दण्डधरेण[1] निवेदितो विनयतः प्रणिपत्य सभापतिम् ।
दुरितसंविदनध्ययनं सुधीरिति जगाद सुधास्नपिताक्षरम् ॥ ७६ ॥

राकाकामुकवद्दिगम्बरपथालंकारभूतोऽधुना
बाह्योद्यानमवातरद्ग्रहपथात्कश्चिन्मुनिश्चारणः ।
यत्पादप्रणयोत्सवात्किमपरं पुष्पाङ्कुरच्छद्मना
वृक्षैरप्यनपेक्षितात्मसमयैः क्ष्मापाल रोमाञ्चितम् ॥ ७७ ॥

क्रीडाशैलप्रस्थपद्मासनस्थस्तत्त्वाभ्यासैः स प्रचेता इतीदम् ।
नामाख्यातं पार्श्ववर्तिव्रतीन्द्रैः कुर्वन्नास्ते तत्र संसूत्रितार्थम् ॥ ७८ ॥

इत्याकस्मिकविस्मयां कलयतस्तस्मात्क्रमच्छेदिनीं
ज्योत्स्नावद्यातियामिनीशविषयां वार्तामवार्तोत्सवाम् ।
दृग्भ्यामिन्दुमणीयितं करयुगेणाम्भोजलीलायितं
पारावारजलायितं च परमानन्देन राज्ञस्तदा ॥ ७९ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये द्वितीयः सर्गः ।

---

1. प्रतीहारेण.

## तृतीयः सर्गः।

अथोत्थाय नृपः पीठाद्भानुः पूर्वाचलादिव।
साधोः [1]प्रचेतसस्तस्य दिशं प्राप्य ननाम सः ॥ १ ॥
स तस्मै वनपालाय ददौ तोषतरोः फलम्।
मनोरथलताबीजप्राभृतस्येव निष्क्रयम् ॥ २ ॥
आज्ञामिव पुरि क्लेशनिष्कासनपटीयसीम्।
मुनीन्द्रवन्दनारम्भभेरीं प्रादापयन्नृपः ॥ ३ ॥
व्यानशे ककुभस्तस्याः कादम्बिन्या इव ध्वनिः।
उत्कयन्निर्भरानन्दमेदुरान्पौरकेकिनः ॥ ४ ॥
चन्दनस्थासकैर्हास्यं लास्यमप्युल्लसद्ध्वजैः।
पुष्पोत्करैश्च रोमाञ्चं पुरमप्याददे तदा ॥ ५ ॥
अमान्त इव हर्म्येभ्यस्तदा गमनसंमदात्।
पौराः प्रथितनेपथ्याः स्वेभ्यः स्वभ्यो विनिर्ययौ ॥ ६ ॥
बहिस्तोरणमागत्य रथाश्वेभनिषादिनः।
दूता इवार्थसंसिद्धेस्तमुदैक्षन्त पार्थिवाः ॥ ७ ॥
दिगम्बरपदप्रान्तं राजापि सह कान्तया।
प्रतस्थे रथमास्थाय प्रभया भानुमानिव ॥ ८ ॥
नृपाः संचारिणः सर्वे तमाविष्कृतसात्त्विकम्।
मुनीन्द्रवन्दनारूढं रसं भावा इवान्वयुः ॥ ९ ॥
[2]सज्जालकानसौ तत्र [3]मत्तवारणराजितान्।
गृहानिव नृपान्प्रेक्ष्य पिप्रिये प्रान्तवर्तिनः ॥ १० ॥
प्रागेव जग्मुरुद्यानं सेवाक्षणविचक्षणाः।
फलपुष्पाहरास्तस्य मूर्तिमन्त इवर्तवः ॥ ११ ॥

---

१. प्रचेतोनामकस्य यतेः; (पक्षे) प्रचेतसो वरुणस्य दिशं पश्चिमाम्. २. सज्ज-अलकान्; सत्-जालकान्. जालको गवाक्षः. ३. 'उक्तो मत्तवारणस्तु प्रभिन्नकटकुञ्जरे। क्लीबं प्रसादवीथीनां कुन्दवृक्षवृतावपि ॥' इति मेदिनी.

परस्पराङ्गसंघट्टभ्रष्टहारावचूलकैः ।
पथि दुःसंचरो मार्गो मार्गैः पाशैरिवाभवत् ॥ १२ ॥
दृष्ट्या कुवलयस्यापि जेता दर्शितविग्रहः ।
नेत्रोत्सवाय नारीणां नारीणां सोऽभवन्नृपः ॥ १३ ॥
सोऽङ्गलावण्यसंक्रान्तपौरनारीनरेक्षणः ।
गन्धर्वैरावृतः साक्षात्सहस्राक्ष इवाबभौ ॥ १४ ॥
बभुस्तस्य मुखाम्भोजपर्यन्तभ्रान्तषट्पदाः ।
अन्तर्मुनीन्दुसंधानान्निर्यद्ध्वान्तलवा इव ॥ १५ ॥
बिभ्रत्सविभ्रमश्चारुतिलकामलकावलिम् ।
उल्लसत्पत्रवल्लीको दीर्घनेत्रधृताञ्जनः ॥ १६ ॥
युक्तोऽप्युत्तालपुंनागैः सालसंगममादधत् ।
कामाराम इवारामं पौररामाजनो ययौ ॥ १७ ॥ (युग्मम्)
पुरंध्रीणां स वृद्धानां प्रतीच्छन्नाशिषः शनैः ।
इष्टसिद्धेरिव द्वारं पुरः प्राप महीपतिः ॥ १८ ॥
यतिभावपरः कान्तिं बिभ्रदभ्यधिकां नृपः ।
निश्चक्राम पुराच्छ्लोकः कवीन्द्रस्य मुखादिव ॥ १९ ॥
शाखानगरमालोक्य पुरः प्रान्ते स पिप्रिये ।
तनूजमिव कान्ताया बहुलक्षणमन्दिरम् ॥ २० ॥

---

१. मृगसमूहः. २. भूमण्डलस्य; उत्पलस्य च. ३ दर्शितशरीरः; कृतयुद्धश्च. ४. न-अरीणाम्. ५. अश्वैः; देवयोनिविशेषैश्च. ६. पक्षिणां भ्रमणेन सहितः; हावविशेषसहितश्च. ७. चारुतिलकयुक्तां चूर्णकुन्तलपङ्क्तिम्; (पक्षे) तिलक आमलकश्च वृक्षविशेषौ. ८. कस्तूर्यादिरसेन स्तनकपोलादिषु कृता रचना पत्रवल्ली; (पक्षे) उल्लसन्त्यः किसलययुक्ता लता यस्मिन्सः. ९. दीर्घलोचनन्यस्तकज्जलः; (पक्षे) दीर्घेण मूलेन धृता अञ्जना वृक्षविशेषा यत्र. १०. वृक्षविशेषैः; पुरुषश्रेष्ठैश्च. ११. सालसं-गमम्; साल-संगमम्. सालो वृक्षविशेषः. १२. नगरस्य. १३. यतिः संन्यासी; (पक्षे) पाठविच्छेदस्थलम्. १४. बहुलक्षण; बहु-लक्षण. क्षण उत्सवः.

प्रागेव विक्रमश्लाघ्यो [1]भवानीतनयोऽप्यभूत् ।
व्यक्तं पुनर्[2]महासेनो महासेनावृतस्तदा ॥ २१ ॥
[3]उच्चैस्तनशिखोल्लासिपत्रशोभामदूरतः ।
वनालीं वीक्ष्य भूपालः प्रेयसीमित्यभाषत ॥ २२ ॥
[4]कान्तारतरवो नैते कामोन्मादकृतः परम् ।
अभवन्नः प्रीतये सोऽप्युद्यन्मधुपराशयः ॥ २३ ॥
[5]अनेकविटपस्पृष्टपयोधरतटा स्वयम् ।
वदत्युद्यानमालेयम[6]कुलीनत्वमात्मनः ॥ २४ ॥
उल्लसत्[7]केसरो [8]रक्तपलाशः [9]कुञ्जराजितः ।
कण्ठीरव इवारामः कं न व्याकुलयत्यसौ ॥ २५ ॥
सैन्यकोलाहलोत्तिष्ठद्विहंगावलयो द्रुमाः ।
अस्मदागमनोत्क्षिप्तपताका इव भान्त्यमी ॥ २६ ॥
संचरच्चञ्चरीकाणां धोरणिस्तोरणस्रजम् ।
विडम्बयति कान्तारे हरिन्मणिमयीमियम् ॥ २७ ॥
पल्लवव्याप्तास्यानां सूरस्यन्दनवाजिनाम् ।
फेनलेशा इवाभान्ति द्रुमाग्रकुसुमोत्कराः ॥ २८ ॥
त्वङ्गत्तुङ्गतुरंगोर्मेस्तीरगं सैन्यवारिधेः ।
पुञ्जिताब्रालशैवालशोभामभ्येति काननम् ॥ २९ ॥

---

१. भवानी-तनयः (कार्तिकेयः). स च वेः पक्षिणः स्ववाहनमयूरस्य क्रमेण पादन्यासेन श्लाघ्यः; (पक्षे) भव-आनीत-नयः. २. महासेन इति कार्तिकेयस्य नामान्तरम्; (पक्षे) महती सेना यस्य. ३. उच्चैः-स्तनशिखा (कुचाग्रभागः); उच्चैस्तन-शिखा. ४. उद्यन्मधुपराशयः समुल्लसद्भ्रमरश्रेणयः कामोन्मादकृतो मदनोद्दीपकाः कान्तार-तरवो वनवृक्षाः परं नः प्रीतयेऽभवन्. सोऽपि कान्ता-रत-रवः कान्तायाः सुरतकालीनं मणितं नः प्रीतयेऽभवत्. कीदृशः कान्तारतरवः. कामोन्मादेन कृतः; उद्यत्-मधु-पर-आशयश्च. ५. षिङ्गस्पृष्टकुचा; वृक्षस्पृष्टमेघा च. ६. नीचकुलोत्पन्नत्वम्; अभूमिलीनत्वं च. उन्नतत्वमिति यावत्. ७. केसरो वृक्षविशेषः; (पक्षे) उल्लसत्स्कन्धोत्पन्नकेशः. ८. रक्तवर्णा पलाशा यस्मिन्; (पक्षे) रक्तं रुधिरं पलं मांसं चाश्नाति. ९. कुञ्ज-राजितः; कुञ्जर-अजितः.

उत्क्षिप्तसहकाराग्रमञ्जरीरुक्मदण्डकः ।
उत्सारयंल्लवङ्गैलालाञ्छिकर्पूरचम्पकान् ॥ ३० ॥
कासारसीकरासारमुक्ताहारविराजितः ।
प्रेर्यमाणो मुहुर्वेल्लल्लताहस्ताग्रसंज्ञया ॥ ३१ ॥
अयमस्माकमेणाक्षि चन्दनामोदसुन्दरः ।
मरुदभ्यर्णतामेति वेत्री[1]वोद्यानभूपतेः ॥ ३२ ॥ (विशेषकम्)
तन्वाना [2]चन्दनोद्दामतिलकं वदने किल ।
करोत्य[3]क्षतदूर्वाभिर्मङ्गलं मे वनस्थली ॥ ३३ ॥
एताः [4]प्रवालहारिण्यो मुदा [5]भ्रमरसंगताः ।
मरुन्नर्तकतालेन नृत्यन्तीव वने लताः ॥ ३४ ॥
निरूपयन्निति प्रीत्या प्रियायाः प्राप्य काननम् ।
तत्क्षणाद[6]क्षमत्याक्षीदौद्धत्यमिव पार्थिवः ॥ ३५ ॥
तत्कालोत्सारिताशेषराजचिह्नो व्यराजत ।
गुरूनभिव्रजन्नेष विनयो मूर्तिमानिव ॥ ३६ ॥
[7]नक्षत्रैरुन्नतैर्युक्तः सकान्तः केलिकाननम् ।
[8]कराग्रं कुड्मलीकृत्य [9]राजा वनमिवाविशत् ॥ ३७ ॥
ददर्शाशोकमस्तोकस्तवकैस्तत्र पाटलम् ।
रागैश्छन्नमिवासन्नमुनीनां मुक्तमानसैः ॥ ३८ ॥
अधस्तात्तस्य विस्तीर्णे स्फाटिकोपलविष्टरे ।
तपः प्रगुणितागण्यपुण्यपुञ्जमिव स्थितम् ॥ ३९ ॥
दत्तनेत्रोत्सवारम्भमाश्रितं मुनिसत्तमैः ।
ऋक्षैरिव धरोत्तीर्णं क्षणं नक्षत्रनायकम् ॥ ४० ॥

---

१. प्रतीहारः. २. चन्दनवृक्षेणोद्दामं तिलकं वृक्षविशेषम्; (पक्षे) चन्दनस्योद्दामं तिलकं विशेषकम्. ३. अक्षताभिर्दूर्वाभिः; अक्षतैरभग्नतण्डुलैर्युक्ताभिर्दूर्वाभिश्च. ४. प्रवालैः पल्लवैः; विद्रुमैश्च. ५. भ्रमर-संगताः; भ्रमरसं-गताः. ६. अक्षं रथम्; आयव्ययादिव्यवहार-चिन्तां वा. ७. न-क्षत्रैः क्षत्रियैः; (पक्षे) उडुभिः ८. बद्धाञ्जलिः; संकुचितकिरणश्च. ९. राजा चन्द्रः.

अन्तरस्तावकाशेन ज्ञानसिन्धुमहोर्मिभिः ।
मलेन लिप्तबाह्याङ्गं दर्शयन्तमनादरम् ॥ ४१ ॥
अत्यन्तनिःसहैरङ्गैर्मुक्ताहारपरिग्रहैः ।
व्यक्तयन्तमिवासक्तिं मुक्तिकान्तानुबन्धिनीम् ॥ ४२ ॥
नासावंशाग्रविन्यस्तस्तोकसंकोचितेक्षणम् ।
भावयन्तमथात्मानमात्मन्येवात्मनात्मनः ॥ ४३ ॥
दर्शनज्ञानचारित्रतपसामेकमाश्रयम् ।
क्षमागारं गतागारं मुनिमैक्षिष्ट पार्थिवः ॥ ४४ ॥ (कुलकम्)
अथास्पदं नभोगानां स्वर्णशैलमिव स्थिरम् ।
गुरुं प्रदक्षिणीकृत्य स राजा विशदांशुकः ॥ ४५ ॥
इलामूलमिलन्मौलिर्नत्वा भूमौ न्यविक्षत ।
न परं विनयश्रीणामाश्रयः श्रेयसामपि ॥ ४६ ॥ (युग्मम्)
मङ्गलारम्भसंरम्भप्रध्वनद्दुन्दुभिध्वनिम् ।
विडम्बयन्नथोवाच वाचमाचारवानिति ॥ ४७ ॥
त्वत्पादपादपच्छायां चिन्तासंतापशांन्तिदाम् ।
संप्रति प्राप्य मुक्तोऽस्मि भवभ्रमपरिश्रमात् ॥ ४८ ॥
यदभूदस्ति यद्यच्च भावि स्वं जन्म तन्मया ।
निर्णीतं पुण्यवन्नाथ त्वदालोकनमात्रतः ॥ ४९ ॥
तपोन्वितेन सूर्येण सदोषेणेन्दुनापि किम् ।
यो भवानिव दृष्टोऽपि न भिनत्त्यान्तरं तमः ॥ ५० ॥
चित्रमेतज्जगन्मित्रे नेत्रमैत्रीं गते त्वयि ।
यन्मे जडाशयस्यापि पङ्कजातं निमीलति ॥ ५१ ॥

---

१. मुक्त-आहार; मुक्ता-हार. २. न-भोगानाम्; (पक्षे) नभोगानां देवानाम्. ३. गीष्पतिम्; यतिं च. ४. स्वच्छवस्त्रः; निर्मलकिरणश्च. ५. सूर्ये; सुहृदि च. ६. मन्दबुद्धेः; जलाशयस्य तडागादेश्च. ७. पापसमूहः; कमलं च.

[1]युष्मत्पदप्रयोगेण पुरुषः स्याद्यदुत्तमः ।
अर्थोऽयं सर्वथा नाथ लक्षणस्याप्यगोचरः ॥ ५२ ॥
तथा मे पोषिता कीर्तिस्त्वद्दर्शनरसायनैः ।
यथास्तां त्रि[2]दशावासे मात्य[3]नन्तालयेऽपि न ॥ ५३ ॥
निर्निमेषं गलद्दोषं निर्व्यपेक्षमपक्ष्मलम् ।
ज्ञानचक्षुः सदोन्निद्रं न स्खलत्येव ते क्वचित् ॥ ५४ ॥
सिद्धमिष्टं त्वदालोकाज्ज्ञातं च ज्ञानिना त्वया ।
तत्पुनः प्रोच्यतेऽस्माभिः शंसितुं जाड्यमात्मनः ॥ ५५ ॥
इयं प्राणप्रिया पत्नी समयेऽपि स्थिता सती ।
निष्फलेव क्रियात्यर्थमनपत्या दुनोति माम् ॥ ५६ ॥
अदृष्टसंततिः स्पष्टामिष्टार्थप्रसवामपि ।
इमामहं महीं मन्ये केवलं भारमात्मनः ॥ ५७ ॥
[4]चतुर्थपुरुषार्थाय स्पृहयालोर्ममाधुना ।
अदर्शनायते मोहान्नन्दनस्याप्यदर्शनम् ॥ ५८ ॥
दशामन्त्यां गतस्यापि पुंसस्तावन्न शस्यते ।
प्रदीपस्येव निर्वाणं यावन्नान्यं प्रकाशयेत् ॥ ५९ ॥
तत्कलत्रे कदान्वेव रसलीलालवालके ।
संपत्स्यते ममोद्भिन्नमनोरथतरोः फलम् ॥ ६० ॥
श्रुत्वेति प्रत्युवाचेदं मुनिर्भूपालकर्णयोः ।
लग्नदन्तद्युतिव्याजात्सुधाधारा इवोद्गिरन् ॥ ६१ ॥
नेदृक्चिन्ताक्लमस्यासि वस्तुतत्त्वज्ञ भाजनम् ।
नेत्राधृष्यं क्वचित्तेजस्तमसा नाभिभूयते ॥ ६२ ॥

---

१. भवदीयचरणारविन्दसंबन्धेन पुरुषो जन उत्तमो भवति. अयमर्थो लक्षणस्य व्याकरणशास्त्रस्याप्यगोचरः. व्याकरणे हि युष्मत्पदयोगेन मध्यमः पुरुषो भवति, न तूत्तमः. २. स्वर्गे; त्रिदशमिते आवासे गृहे च. ३. पाताले; असंख्याते गृहे च. अतिपुष्टा कीर्तिः स्वर्गे पाताले च न मातीति भावः. यश्चातिपुष्टोऽसंख्यातेष्वपि सदनेषु न माति तस्य त्रिदशमितेष्वावासेषु मानं दूरापास्तमेव. ४. मोक्षः; नाशश्च.

धन्यस्त्वं गुणपण्यानामापणस्त्वं महीपते ।
त्वमेव संश्रयः श्रीणां सरितामिव सागरः ॥ ६३ ॥
त्वत्कीर्तिजह्नुकन्याया इतो लोकत्रयातिथेः ।
अन्तः प्रपत्स्यते राजन्राजहंसश्रियं शशी ॥ ६४ ॥
न परं क्षत्रियाः सर्वे त्वामनु त्रिदिवेश्वराः ।
नह्युदात्तस्य माहात्म्यं लङ्घयन्तीतरे स्वराः ॥ ६५ ॥
क्षोदीयानहमस्मीति मात्मानमवजीगणः ।
भवितासि त्वमचिराज्जगत्त्रयगुरोर्गुरुः ॥ ६६ ॥
गुर्णैर्घनोन्नते नूनं भवदावाग्निदीपितः ।
[1]त्वज्जन्मना जनः शान्तिममृतेनायमेष्यति ॥ ६७ ॥
या चैषा भवतः पत्नी सुव्रता सुव्रताख्यया ।
ह्रेपयिष्यति सा वेलां रत्नकुक्षितयोदधेः ॥ ६८ ॥
संसारसारसर्वस्वं भूत्रयस्यापि भूषणम् ।
इदमेनोविषच्छेदि स्त्रीरत्नमिति बुध्यताम् ॥ ६९ ॥
क्षुद्रतेजःसवित्रीभिः स्त्रीभिर्दिग्भिरिवात्र किम् ।
धन्येयं या जगच्चक्षुर्द्योभिः प्राचीव धास्यति ॥ ७० ॥
षण्मासादूर्ध्वमेतस्याः सरस्याः प्रतिमेन्दुवत् ।
[2]चतुर्दशाधिको गर्भे दिवस्तीर्थकृदेष्यति ॥ ७१
कृतार्थाविति मन्येथामात्मानौ तद्युवामिह ।
नह्यन्यो भविनां लाभः सुतादेवंविधात्परः ॥ ७२ ॥
जन्म वा जीवितव्यं वा [3]गृहमेधाथवा द्वयोः ।
आ कल्पं युवयोरेव यास्यति श्लाघ्यतामितः ॥ ७३ ॥

इत्थं ग्रन्थिमिव प्रमथ्य कृतिना तेनोरुचिन्ताभरं
वागर्थाविव तौ प्रसादमधिकं तं प्रापितौ दंपती ।
अन्तर्गूढगभीरभावपिशुनं यं भावयन्तश्चिरा-
ज्जातास्ते प्रमदेन पीनपुलकप्रोल्लासिनः सज्जनाः ॥ ७४ ॥

---

१ त्वत्पुत्रेण. २. पञ्चदशस्तीर्थंकरो धर्मनाथः. ३. गार्हस्थ्यम्.

अथ तथाविधभाविसुतोदयश्रवणतः प्रणतः पुनरप्यसौ ।
प्रमदगद्गदवागिति वाग्मिनां पतिरुवाच वचांसि मुनिं नृपः ॥ ७५ ॥

स्वर्गे संप्रति कः पुनात्ययमथो कुत्रास्य जन्मन्यमू-
छामस्तीर्थकरत्वदानसुहृदः सम्यक्त्वचिन्तामणेः ।
इत्थं वाग्भववैभवव्यतिकरं त्वं ब्रूहि जन्मार्णवो-
त्तीर्णस्यास्य भविष्यतो जिनपतेः शुश्रूषुरेषोऽस्म्यहम् ॥ ७६ ॥

इति प्रीतिप्रायं वहलपुलकस्यास्य सकलं
कलङ्कातङ्कानामपशकुनमाकर्ण्य वचनम् ।
मुनिः स्पष्टं द्रष्टुं तदपरभवोदारचरितं
प्रकर्षेणाकार्षीदवधिनयनोन्मीलनविधिम् ॥ ७७ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये तृतीयः सर्गः ।

---

चतुर्थः सर्गः ।

अथोपनिद्रावधिबोधचक्षुः स्वहस्तमुक्तावदवेक्ष्यमाणः ।
जिनस्य तस्यापरजन्मवृत्तं वृत्तान्तसाक्षीव मुनिर्बभाषे ॥ १ ॥
यत्पृष्टमिष्टं भवतार्थसिद्ध्यै तत्पार्थिवाकर्णय वर्ण्यमानम् ।
कथा कथंचित्कथिता श्रुता वा जैनी यतश्चिन्तितकामधेनुः ॥ २ ॥
स धातकीखण्ड इति प्रसिद्धे द्वीपेऽस्ति विस्तारिणि पूर्वमेरुः ।
नभो निरालम्बमवेक्ष्य केनाप्युज्जृम्भितः स्तम्भ इवेक्ष्यते यः ॥ ३ ॥
विभूषयन्पूर्वविदेहमस्य सीतासरिद्दक्षिणकूलवर्ती ।
एकोऽप्यनेकेन्द्रियहर्षहेतुर्वत्साभिधानो विषयोऽस्ति रम्यः ॥ ४ ॥
राजन्ति यत्र स्फुटपुण्डरीकप्रकाशिनः शाड्वलशालिवप्राः ।
च्युता निरालम्बतया कथंचिदाकाशदेशा इव चारुताराः ॥ ५ ॥
उद्गायतीव भ्रमदिक्षुयन्त्रचीत्कारनादैः श्रुतिसुन्दरैर्यः ।
प्रनृत्यतीवानिललोलसस्यैः स्वसंपदुत्कर्षमदेन मत्तः ॥ ६ ॥

---

१. रत्नत्रयस्यैव सम्यक्त्वमिति संज्ञान्तरम्. रत्नत्रयं च सम्यग्दर्शनज्ञानचारित्रलक्षणम्. २. स्फुरितावधिज्ञाननेत्रः.

अग्रे भजन्तो विरसत्वमन्तः सग्रन्थयो निष्फलमुन्नमन्तः ।
अचेतना इक्षव एव यत्र निष्पीड्यमाना रसमुत्सृजन्ति ॥ ७ ॥
द्रष्टुं चिरेणात्मकुलप्रसूतां श्रियं विशिष्टाभ्युदयामुपेताः ।
यस्मिन्नुदन्वन्त इवावभान्ति विस्फारिताम्भोजदृशस्तडागाः ॥ ८ ॥
फलावनम्राम्रविलम्बिजम्बूजम्बीरनारङ्गलवङ्गपूगम् ।
सर्वत्र यत्र प्रतिपद्य पान्थाः पाथेयभारं पथि नोद्वहन्ति ॥ ९ ॥
यत्रानुकूलं ज्वलदर्ककान्तेर्विलीनकार्तस्वरपूरशङ्काम् ।
मध्यंदिनेऽम्भोजरजःपिशङ्गं क्षणं विधत्तेऽम्बु तरङ्गिणीनाम् ॥ १० ॥
काले प्रजानां जनयन्ति तापं करा रवेरेव न यत्र राज्ञः ।
स्याद्भोगभङ्गोऽपि भुजंगमानां स्वस्थे कदाचिन्न पुनर्नराणाम् ॥ ११ ॥
तटे तटिन्यास्तरवः समृद्धिं संप्राप्य यत्र प्रतिनिष्क्रयाय ।
छायाछलात्तज्जलदेवताभ्यो दातुं फलानीव विशन्ति मध्ये ॥ १२ ॥
निर्माय निर्माय पुरीः सुराणां यच्छिक्षितं शिल्पकलासु दाक्ष्यम् ।
तस्यैव धात्रा विहितास्ति तत्र प्रकर्षसीमा नगरी सु[1]सीमा ॥ १३ ॥
नितम्बभूचुम्बिवनान्तरीया यानाल्पतोच्चैस्तनवप्रभागम् ।
वातोच्छलत्पुष्परजःपटेन ह्रीता वधूवत्स्वमुपावृणोति ॥ १४ ॥
अधृष्यमन्यैरधिरुह्य सालं नीलाश्मकूटांशुमिषेण यस्याः ।
रुणद्धि रुद्धो बहुधान्धकारः क्रुधेव तिग्मांशुकरप्रचारम् ॥ १५ ॥
यत्रोच्चहर्म्याग्रजुषामुदग्रान्पश्यन्मुखेन्दून्निशि सुन्दरीणाम् ।
ग्राह्ये तुषारत्विषि जातमोहः क्षणं भवेत्पर्वणि सैंहिकेयः ॥ १६ ॥
[2]कामं प्रति प्रो[3]ज्झितकृष्णवर्त्मा दृष्ट्वापि दे[4]हीति निमील्य शब्दम् ।
लोके दधानोऽपि म[5]हेश्वरत्वं न दृश्यते यत्र जनो वि[6]षादी ॥ १७ ॥
यत्रोच्चहर्म्याग्रहरिन्मणीनां प्रभासु दूर्वाङ्कुरकोमलासु ।
क्षणं क्षिपन्तो वदनान्य[7]नूरुं रवेस्तुरंगाः परिखेदयन्ति ॥ १८ ॥

---

१. सुसीमेति नगरीनाम. २. कंदर्पम्; अभिलाषं च. ३. त्यक्तमलिनमार्गः; मुक्तनेत्रानलश्च. ४. 'देहि' इति याचकशब्दम्; (पक्षे) देही शरीरी. ५. शिवत्वम्; प्रभुत्वं च. ६. विषभक्षकः; खिन्नश्च. ७. अरुणं सूर्यसारथिम्.

व्यापार्य [1]सज्जालकसंनिवेशे [2]करानभिप्रेङ्खति यत्र [3]राज्ञि ।
द्रवत्य[4]नीचैस्तनकूटरम्या कान्तेव चन्द्रोपलहर्म्यपङ्क्तिः ॥ १९ ॥
प्रक्षिप्य पूर्वेण मही महीभृत्करेण यान्स्वीकुरुतेऽपरेण ।
अन्तर्ययाप्तुं ग्रहकन्दुकांस्तान्हस्ता जिनागारमिषादुदस्ताः ॥ २० ॥
सारेषु रत्नेषु यया गृहीतेष्वब्धिर्वृथा वीचिभुजैः प्रनृत्यन् ।
रत्नाकरत्वेन न लज्जते यत्ततः स मे भाति जडस्वभावः ॥ २१ ॥
मुहुर्मुहुः स्फाटिकहर्म्यभित्तौ निरीक्ष्य रागापनिनीपयास्ये ।
स्वच्छामपि क्रान्तरदच्छदाभां दन्तच्छविं यत्र वधूः प्रमार्ष्टि ॥२२॥
स्वस्थो धृताच्छद्म[5]गुरूपदेशः [6]श्रीदानवारातिविराजमानः ।
यस्यां करोल्लासित[7]वज्रमुद्रः पौरो जनो जिष्णुरिवावभाति ॥ २३ ॥
तद्यत्र चित्रं यदणीयसापि [9]स्नेहेन हीनाः स्मरदीपिकास्ताः ।
नैतत्पुनर्य[10]न्नकुलप्रसूता [11]भुजंगमोहं जनयन्ति वेश्याः ॥ २४ ॥
यां सारसर्वस्वनिधानकुम्भीं संवेष्ट्य शश्वत्परिखामिषेण ।
उद्भिद्य पातालतलान्युदीर्णा [12]विषप्रपूर्णा [13]भुजगी प्रयाति ॥ २५ ॥
निःशेषनम्रावनिपालमौलिमालारजःपिञ्जरिताङ्घ्रिपीठः ।
स भूपतिस्तत्र बभूव शास्ता [14]रथं जना यं दशपूर्वमाहुः ॥ २६ ॥
अनेन कोपज्वलनेन दग्धाः सहासपुष्पाः खलु पत्रवल्ल्यः ।
त्वक्पाण्डिमा वैरिवधूकपोले कुतोऽन्यथा भस्मवदुल्ललास ॥ २७ ॥
अन्ये भियोपात्तपयोधिगोत्राः क्षोणीभुजो जग्मुरगम्यभावम् ।
लक्ष्मीस्ततो वारिधिराजकन्या तमेकमेवात्मपतिं चकार ॥ २८ ॥
वैधव्यदग्धारिवधूप्रहारहारावचूलच्युतमौक्तिकौघाः ।
बभुः प्रकीर्णाः सकलासु दिक्षु यशस्तरोर्बीजकणा इवास्य ॥ २९ ॥

---

१. सत्-जालक (गवाक्ष); सज्ज-अलक. २. किरणान्; हस्तांश्च. ३. चन्द्रे; नृपतौ च. ४. अनीचैस्तन(उच्चतर)-कूट; अनीचैः-स्तनकूट. ५. गुरुर्बृहस्पतिः; उपदेष्टा च. ६. श्रिया युक्तो यो दानवारातिर्विष्णुस्तेन; (पक्षे) श्रियो दाने वारा उत्सर्गजलेन. ७. पविः; हीरकश्च. ८. इन्द्रः. ९. तैलेन; प्रीत्या च. १०. न-कुल; नकुलः प्राणिविशेषश्च. ११. भुजंगमाः सर्पाः; पिड्गाश्च. १२. विषं जलम्; गरलं च. १३. नदीविशेषः; सर्पिणी च. १४. दशरथम्.

युक्तं तदाच्छिद्य वशीकृतेऽस्मिन्गोमण्डले तेन वृषोन्नतेन ।
रक्ताक्षतां बिभ्रदियाय रोषाद्वैरी वनं यन्महिषीभिरेव ॥ ३० ॥
यत्पुण्डरीकाक्षमपि व्यपास्य स्मराकृतेस्तस्य वशं गता श्रीः ।
सेर्ष्यं विरूपाक्ष इतो व्यधासीद्देहार्धनद्धां किल शैलपुत्रीम् ॥ ३१ ॥
दोषोच्चयेभ्यश्चकितः स विद्वान्गताः पुनस्ते प्रपलाय्य तस्मात् ।
इत्यस्य विस्तारियशश्छलेन विरुद्धमद्यापि दिशो हसन्ति ॥ ३२ ॥
सकज्जलाश्रुव्यपदेशनिर्यद्भृङ्गावली वैरिविलासिनीनाम् ।
राज्ञा कृतं तेन रसाब्धिलोलहृत्पद्मसंकोचमवोचदुच्चैः ॥ ३३ ॥
उत्खातखड्गप्रतिबिम्बिताङ्गो रराज राजा समरप्रदोषे ।
जयश्रियासावभिसारणाय नीलेन संवीत इवांशुकेन ॥ ३४ ॥
अनारतं वीररसाभियोगैरायासितेव क्षणमस्य यूनः ।
विलासिनी भ्रूलतिकाग्ररङ्गच्छायासु विश्राममियाय दृष्टिः ॥ ३५ ॥
सरागमुर्व्या मृगनाभिदम्भादपारकर्पूरपदेन कीर्त्या ।
रत्यापि दन्तच्छदरुक्छलेन स एकहेलं सुभगोऽवगूढः ॥ ३६ ॥
असत्पथस्थापितदण्डलब्धस्थामातिवृद्धो विहितस्थितिर्यः ।
स एव रक्षार्थमशेषलक्ष्म्याः क्षात्त्रोऽस्य धर्मोऽजनि सौविदल्लः ॥३७॥
प्रयच्छता तेन समीहितार्थान्नूनं निरस्तार्थिकुटुम्बकेभ्यः ।
व्यर्थीभवत्त्यागमनोरथस्य चिन्तामणेरेव बभूव चिन्ता ॥ ३८ ॥
दूरात्समुत्तंसितशासनोरुसिन्दूरमुद्रारुणभालमूलाः ।
यस्य प्रतापेन नृपाः कचाग्रकृष्टा इवाजग्मुरुपासनाय ॥ ३९ ॥
विधाय कान्तारसमाश्रितांस्तान्हारावसक्तान्विदुषो द्विषश्च ।
क्रीडन्स लीलारसलालसाभिरासीच्चिरं चञ्चललोचनाभिः ॥ ४० ॥
अथैकदा व्योम्नि निरभ्रगर्भक्षणक्षपायां क्षणदाधिनाथम् ।
अनाथनारीव्यथनैनसेव स राहुणा प्रैक्ष्यत गृह्यमाणम् ॥ ४१ ॥

---

१. भूवलये; धेनुसमूहे च. २. वृषोऽनड्वान्; धर्मश्च. ३. महिषत्वम्; अरुणनेत्रत्वं च. ४. सैरिभीभिः; कृताभिषेकाभिः पत्नीभिश्च. ५. कमलतुल्यनेत्रम्; विष्णुं च. ६. विकृतनेत्रः; शिवश्च. ७. कञ्चुकी. ८. कान्ता; रसं-आश्रितान्; कान्तार-समाश्रितान्. ९. हार-अवसक्तान्; हा-राव-सक्तान्. १०. पूर्णिमारात्रौ. ११. चन्द्रम्.

किं सीधुना स्फाटिकपानपात्रमिदं रजन्याः परिपूर्यमाणम् ।
चलद्द्विरेफोच्चयचुम्ब्यमानमाकाशगङ्गास्फुटकैरवं वा ॥ ४२ ॥
ऐरावणस्याथ करात्कथंचिच्च्युतः सपङ्को बिसकन्द एषः ।
किं व्योम्नि नीलोपलदर्पणाभे सश्मश्रु वक्त्रं प्रतिबिम्बितं मे ॥ ४३ ॥
क्षणं वितर्क्येति स निश्चिकाय चन्द्रोपरागोऽयमिति क्षितीशः ।
दृङ्मीलनाविष्कृतचित्तखेदमचिन्तयच्चैवमुदारचेताः ॥४४॥ (विशेषकम्)
हा हा महाकष्टमचिन्त्यधाम्नि किमेतदत्रापतितं हिमांशौ ।
यद्वा किमुल्लङ्घयितुं कथंचित्केनापि शक्यो नियतेर्नियोगः ॥ ४५ ॥
सुधाद्रवैर्मन्मथमात्मबन्धुमुज्जीव्य नेत्राग्निशिखावलीढम् ।
क्रुधेव तद्वैरविनिष्क्रयार्थं स्थाणोरसौ मूर्ध्नि पदं विधत्ते ॥ ४६ ॥
कुतश्चिरं जीवति वाडवाग्नौ वर्तेत वार्धिः सह जीवनेन ।
अनेन चेच्चारुवसुप्रपञ्चैर्नीयेत न प्रत्यहमेव वृद्धिम् ॥ ४७ ॥
सुधाकरेणाप्यजरामरत्वं नीता सुरा एव मयात्र नान्ये ।
इतीव पूर्णोऽप्यतिलज्जमानः पुनः पुनः कार्श्यमसौ व्यनक्ति ॥ ४८ ॥
सुदुर्धरध्वान्तमलिम्लुचानामुत्सार्य सेनामनिवार्यतेजाः ।
रतेर्गलग्रन्थिमिवाबलानां मानं भिनत्त्येष चिरात्कराग्रैः ॥ ४९ ॥
इत्येष निःशेषजगल्ललामलीलायमानप्रसरद्गुणोऽपि ।
राजा दशां प्रापदिहेदृशीं चेत्को नाम तत्स्यात्सुखपात्रमन्यः ॥५०॥
उपागमे तद्विपदामवश्यं पश्यामि किंचिच्छरणं न जन्तोः ।
अपारपाथोनिधिमध्यपातिपोताच्च्युतस्येव विहंगमस्य ॥ ५१ ॥
नीरोषितायाः अपि सर्वदास्याः पश्यामि नार्द्रं हृदयं कदाचित् ।
युक्तं ततः पुंसि कलामयेऽपि स्थिरो न लक्ष्म्याः प्रणयानुबन्धः॥५२॥
अल्पीयसि स्वस्य फले यदेषा विस्तारिता श्रीः परिवारहेतोः ।
गुडेन संवेष्ट्य ततो मयात्मा मत्कोटकेभ्यः किमु नार्पितोऽयम्॥५३॥

१. चन्द्रः. २. मत्कोटकः पिपीलकसदृशो गुडादिमधुरपदार्थभक्षको 'मकोडा' इति प्रसिद्धः कीटविशेषः.

अहरिवापातमनोरमेषु भोगेषु नो विश्वसिमः कथंचित् ।
मृगः सतृष्णो मृगतृष्णिकासु प्रतार्यते तोयधिया न धीमान् ॥ ५४ ॥
अन्याङ्गनासंगमलालसानां जरा कृतेर्ष्येव कुतोऽप्युपेत्य ।
आकृष्य केशेषु करिष्यते नः पदप्रहारैरिव दन्तभङ्गम् ॥ ५५ ॥
क्रान्ते तवाङ्गे वलिभिः समन्तान्नश्यत्यनङ्गः किमसावितीव ।
वृद्धस्य कर्णान्तगता जरेयं हसत्युदञ्चत्पलितच्छलेन ॥ ५६ ॥
[1]रसाढ्यमप्याशु विकासिकाशसंकाशकेशप्रसरं तरुण्यः ।
उदस्थिमातङ्गजनोदपानपानीयवन्नाम नरं त्यजन्ति ॥ ५७ ॥
आकर्णपूर्णं कुटिलालकोर्मि रराज लावण्यसरो यदङ्गे ।
वलिच्छलात्सारणिधोरणीभिः प्रवाह्यते तज्जरसा नरस्य ॥ ५८ ॥
[2]असंभृतं मण्डनमङ्गयष्टेर्नष्टं क्व मे यौवनरत्नमेतत् ।
इतीव वृद्धो नतपूर्वकायः पश्यन्नधोधो भुवि बम्भ्रमीति ॥ ५९ ॥
इत्थं पुरः प्रेष्य जरामधृष्यां दूतीमिवापप्रसरोग्रदंष्ट्रः ।
यावन्न कालो ग्रसते बलान्मां तावद्यतिष्ये परमार्थसिद्ध्यै ॥ ६० ॥
इत्येष संचिन्त्य विनिश्चितार्थो वैराग्यवान्भ्रातरमात्यबन्धून् ।
पप्रच्छ राजा तपसे यियासुः किं वा विमोहाय विवेकिनां स्यात् ॥ ६१ ॥
तं प्रेक्ष्य भूपं परलोकसिद्ध्यै साम्राज्यलक्ष्मीं तृणवत्त्यजन्तम् ।
मन्त्री सुमन्त्रोऽथ विचित्रतत्त्वचित्रीयमाणामिति वाचमूचे ॥ ६२ ॥
देव त्वदारब्धमिदं विभाति [3]नभःप्रसूनाभरणोपमानम् ।
[4]जीवाख्यया तत्त्वमपीह नास्ति कुतस्तनी तत्परलोकवार्ता ॥ ६३ ॥

---

१. 'वर्णे सितं शिरसि वीक्ष्य शिरोरुहाणां स्थानं जरापरिभवस्य तदेव पुंसाम् । आरोपितास्थिशकलं परिहृत्य यान्ति चाण्डालकूपमिव दूरतरं तरुण्यः ॥' इति भर्तृहरिश्लोकसमानार्थोऽयं श्लोकः. २. अयं प्रथमः पादः कुमारसंभव(१।३१)श्लोकस्य प्रथमः पादश्च समान एव. ३. खपुष्पशेखरतुल्यम्. ४. चार्वाकमतमेतत्. 'तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि । तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते । तेषु विनष्टेषु सत्सु स्वयं विनश्यति । तच्चैतन्यविशिष्टदेह एवात्मा । देहातिरिक्ते आत्मनि प्रमाणाभावात् ।' इत्यादि सर्वदर्शनसंग्रहे द्रष्टव्यम्.

न जन्मनः प्राङ् न च पञ्चतायाः परो विभिन्नेऽवयवे न चान्तः ।
विशन्न निर्यन्न च दृश्यतेऽस्माद्भिन्नो न देहादिह कश्चिदात्मा ॥६४॥
किं त्वत्र भूवह्निजलानिलानां संयोगतः कश्चन यन्त्रवाहः ।
गुडान्नपिष्टोदकधातकीनामुन्मादिनी शक्तिरिवाभ्युदेति ॥ ६५ ॥
विहाय तद्दृष्टमदृष्टहेतोर्वृथा कृथाः पार्थिव मा प्रयत्नम् ।
को वा स्तनाग्राण्यवधूय धेनोर्दुग्धं विदग्धो ननु दोग्धि शृङ्गम् ॥६६॥
श्रुत्वेत्यवादीन्नृपतिर्विधुन्वन्भानुस्तमांसीव स तद्वचांसि ।
अपार्थमर्थं वदतः सुमन्त्र नामापि ते नूनमभूदपार्थम् ॥ ६७ ॥
जीवः[1] स्वसंवेद्य इहात्मदेहे सुखादिवद्बाधकविप्रयोगात्[2] ।
काये परस्यापि स बुद्धिपूर्वव्यापारदृष्टेः स्व इवानुमेयः ॥ ६८ ॥
तत्कालजातस्य शिशोरपास्य प्राग्जन्मसंस्कारमुरोजपाने[3] ।
नान्योऽस्ति शास्ता तदपूर्वजन्मा जीवोऽयमित्यात्मविदा न वाच्यम्॥६९
ज्ञानैकसंवेद्यममूर्तमेनं मूर्ता परिच्छेत्तुमलं न दृष्टिः ।
व्यापार्यमाणापि कृताभियोगैर्भिनत्ति न व्योम शितासियष्टिः ॥७०॥
संयोगतो भूतचतुष्टयस्य यज्जायते चेतन इत्यवादि ।
मरुज्ज्वलत्पावकतापिताम्भःस्थाल्यामनेकान्त[4] इहास्तु तस्य ॥ ७१ ॥
उन्मादिका शक्तिरचेतना या गुडादिसंबन्धभवा न्यदर्शि ।
सा चेतने ब्रूहि कथं विशिष्टदृष्टान्तकक्षामधिरोहतीह ॥ ७२ ॥
तस्मादमूर्तश्च निरत्ययश्च कर्ता च भोक्ता च सचेतनश्च ।
एकः कथंचिद्विपरीतरूपादवेहि देहात्पृथगेव जीवः ॥ ७३ ॥
निसर्गतोऽप्यूर्ध्वगतिः प्रसह्य प्राक्कर्मणा[5] हन्त गतीर्विचित्राः ।
स नीयते दुर्धरमारुतेन हुताशनस्येव शिखाकलापः ॥ ७४ ॥
तदात्मनः कर्मकलङ्कमूलमुन्मूलयिष्ये सहसा तपोभिः ।
मणेरनर्घस्य कुतोऽपि लग्नं को वा न पङ्कं परिमार्ष्टि तोयैः ॥ ७५ ॥

---

१. जीवः. २. बाधकप्रमाणाभावात्. ३. स्तन्यपाने. ४. व्यभिचारः. ५. 'द्राक्कर्मणा' इति पाठः.

दत्त्वा स तस्योत्तरमित्यबाधं ददौ सुतायातिरथाय राज्यम् ।
यन्निर्व्यपेक्षा परमार्थलिप्सोर्धात्रीं तृणायापि न मन्यते धीः ॥ ७६ ॥
अथैनमापृच्छ्य सबाष्पनेत्रं पुत्रं प्रपित्सुर्वनसंनिवेशम् ।
प्रजाः स भास्वानिव चक्रवाकीराक्रन्दिनीस्तत्प्रथमं चकार ॥ ७७ ॥
त्यक्ताव[1]रोधोऽपि सहावरोधै[2]र्नक्षत्रमुक्तानुपदोऽपि राजा ।
प्रापद्वनं पौरहृदि स्थितोऽपि को वा स्थितिं सम्यगवैति राज्ञाम् ॥७८॥
तद्वाहनं श्रीविमलादिमादौ नत्वा गुरुं भूपशतैरुपेतः ।
तत्रोग्रकर्मक्षयमूलशिक्षां दीक्षां स जैनीमभजज्जितात्मा ॥ ७९ ॥
तथा[3] समुद्रामधिबिभ्रदुर्वीं धुन्वन्नरातीनपि विग्र[4]हस्थान् ।
मु[5]क्तोत्तमालंकरणः प्रजापो वनेऽपि साम्राज्यपदं बभार ॥ ८० ॥
ध्यानानुबन्धस्तिमितोरुदेहो मित्रेऽपि शत्रावपि तुल्यवृत्तिः ।
व्यालोपगूढः स वनैकदेशे स्थितश्चिरं चन्दनवच्चकासे ॥ ८१ ॥
पूषा तपस्यल्परुचिः सदोषः शशी शि[6]खावानपि कृष्णवर्त्मा ।
गुणोदधेस्तस्य ततो न कश्चित्तमः समुन्मूलयतः समोऽभूत् ॥ ८२ ॥
निरामयश्रीस[7]दनाग्रनीव्रं तीव्रं तपो द्वादशधा विधाय ।
धन्योऽथ संन्यासविसृष्टदेहः सर्वार्थसिद्धिं स मुनिर्जगाम ॥ ८३ ॥
तत्र त्र[8]यस्त्रिंशदुदन्वदायुर्देवोऽहमिन्द्रः स बभूव पुण्यैः ।
निर्वाणतोऽर्वागधिकावधीनां मूर्तः सुखानामिव यः समूहः ॥ ८४ ॥
सा तत्र मुक्ताभरणाभिरामा यन्मुक्तिरामा निकटीबभूव ।
मन्ये मनस्तस्य ततोऽन्यनारीविलासलीलारसनिर्व्यपेक्षम् ॥ ८५ ॥
तस्य प्रभाभासुररत्नगर्भा विभ्राजते रुक्मकिरीटलक्ष्मीः ।
अव्याजतेजोनिवहस्य देहे द्राघीयसी प्रज्वलतः शिखेव ॥ ८६ ॥

---

१. बन्धनम्; राज्ञामन्तःपुरं च. २. नक्षत्रैर्मुक्तानुपदो राजा चन्द्र इति विरोधः; (पक्षे) न-क्षत्रमुक्तानुपदः. ३. आ समुद्रां पृथ्वीं बिभ्रत्; (पक्षे) स उर्वीं मुद्रां बिभ्रत्. मुद्रा योगशास्त्रादिप्रसिद्धाः. ४. शरीरस्थान्कामक्रोधादीन्; (पक्षे) युद्धस्थान्. ५. मुक्तानि त्यक्तानि उत्तमभूषणानि येन;. (पक्षे) मौक्तिकमयोत्तमाभरणः. ६. अग्निः. ७. प्रधानगृहम्. ८. त्रयस्त्रिंशज्जलधिमितायुः.

